# विषयानुक्रमणी ।

| विषयः. | पृष्ठम्. |
| --- | --- |

॥ श्रीः ॥

## अवतारिका ।

पुरा खलु केरळेषु, काव्यनाटकालङ्कारेष्विव तर्कव्याकरणादिशास्त्रेष्वपि निष्णाता बहवः कवय आसन् । तेषां ललितसुकुमाराणां पद्यानां प्रणयनविषये यावद्वासनाजन्यं पाटवमासीत् कर्कशतर्कजटिलेषु शास्त्रेष्वपि तावद् वाग्वैभवसहकृतं पाण्डित्यमवर्ततेत्ययं विषयस्सर्वविदित एव । सरससरसैस्सुललितैश्च पद्यैरलङ्कृतासु तेषां कृतिषु लक्ष्मीदासस्य "शुकसन्देशः", वासुदेवस्य "युधिष्ठिरविजयः", शक्तिभद्रस्या "श्चर्यचूडामणिः", शङ्करकवेः "श्रीकृष्णविजयः", नारायणस्य "सुभद्राहरणं" (महाकाव्यं), कोटिलिङ्गपुरयुवराजस्य "रामचरितं", नारायणभट्टस्य "नारायणीय"मित्येवमादयो नितरां प्राधान्यमर्हन्ति ।

किञ्च कविहृदयज्ञाने काव्यामृतरसास्वादने च तेषामासीदनन्यसुलभं प्रागल्भ्यमित्यत्र मेघसन्देशमालतीमाधवोत्तररामचरितमाघरघुवंशानर्घराघवादीनां प्राचीनानां विशिष्टकृतीनां तत्कृतानि व्याख्यानान्येवोत्तमसाक्ष्यं वहन्ति । मानमेयोदयप्रक्रियासर्वस्वप्रपञ्चसारादयस्तेषां शास्त्रग्रन्था औत्तराहाणामपि पण्डितवर्याणां प्रशंसापात्रमभूवन्नितीदं केरळीयानामस्माकमतीव चारितार्थ्यं जनयति । अद्वैतमतस्थापकस्सर्वज्ञस्सर्वलोकविदितमहिमा पूज्यभगवत्पादो जगद्गुरुः श्रीमान् शङ्कराचार्योऽपि इमं देशमवतारेणालमकार्षीदितीदं तत्त्वं विजानतां केषां वा पण्डितानां भवेत् केरळदेशस्यास्य प्राधान्ये विवादः ?

विशिष्य च ज्योतिश्शास्त्रेषु तेषां सर्वातिशायि पाण्डित्यमासीत् । अत्र च तैः प्रणीता भास्करीय-दृग्गणिततन्त्र-तन्त्रसङ्ग्रहादयस्स्वतन्त्रग्रन्थाः, भास्करीय-नीलकण्ठीय-सूर्यदेवीयादय आर्यभटीयभाष्यग्रन्थाश्च दृष्टान्ततां वहन्ति । किञ्च करणपद्धति-स्फुटनिर्णय-करणोत्तमादयोऽप्युत्तमा गणितग्रन्था इदानीमपि प्राकाश्यपदवीमलभमानास्तत्रतत्र ग्रन्थशालासु लीनाः केवलं वम्रचादीनामेवास्वादनयोग्या वर्तन्ते ।

वैद्यशास्त्रेषु चिकित्सायां च केरळीयानां वैदग्ध्यं बहोः कालात् प्रागेव विदेशीयैरपि ज्ञातं प्रत्यक्षतोऽनुभूतं च। अत्रत्यानामष्टवैद्यानामन्येषां च तत्सदृशानां वैद्यवर्याणां अनन्यसाधारणीं चिकित्सानैपुणीं श्रुत्वा विदेशीया बहवो राजानः प्रभवश्च चिकित्सार्थमत्रागत्य चिकित्सया दुरुपशमेभ्योऽपि महारोगेभ्यो विनिर्मुक्ताः स्वस्थात्मानः प्रतिनिवर्तन्त इति च सर्वैरपि सुतरां विज्ञातमेव।

अतिप्रसिद्धस्य वाहटकृताष्टाङ्गहृदयस्य केरळीयवैद्यपण्डितैः कृताः पाठ्यबृहत्पाठ्यहृदयबोधिकाद्या विपुला व्याख्याः, केरळीयानां वैद्यशास्त्रपाण्डित्यं सुस्पष्टं प्रदर्शयन्ति। अन्ये च सन्ति योगरत्नसमुच्चय-हृदयप्रिय-सुखसाधकादयो बहवो ग्रन्था अद्य यावदपि प्राकाश्यमलभमानाः।

तथाभूतेष्वन्तर्लीनेषूत्तमेषु ग्रन्थेषु नरसिंहाचार्यकृतभाष्योपेतो भदन्त-नागार्जुनाचार्यविरचितो 'रसवैशेषिकसूत्रं' नाम कश्चिद् ग्रन्थः पूर्वमेव मया प्राकाशि। तदनन्तरं च द्वितीयतो वैद्यनाथ इत्यपरनामधेयेन नील-मेघभिषजा विरचितस्तन्त्रयुक्तिविचारो नामायं ग्रन्थः सम्प्रति सज्जनसमक्षं मया प्रकाश्यते।

चरकाचार्यमते तन्त्रयुक्तयः पञ्चत्रिंशदित्यधो लिख्यमानेभ्यः पद्येभ्यो ज्ञायन्ते। ताश्च यथा —

"पञ्चत्रिंशद्विचित्राभिर्भूषितं तन्त्रयुक्तिभिः।
तन्त्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च॥

प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम्।
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः॥

प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः।
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः॥

अतीतानागतापेक्षास्वसंज्ञोह्यसमुच्चयाः।
निदर्शनं निर्वचनं संनियोगो विकल्पनम्॥

प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः।
तन्त्रे व्याससमासाभ्यां भवन्त्येतानि कृत्स्नशः॥"

सुश्रुताचार्यस्तु तन्त्रयुक्तयो द्वात्रिंशदित्यभिप्रैति । यथा —

"द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति शास्त्रे । तद्यथा — अधिकरणं योगः पदार्थो हेत्वर्थ उद्देशो निर्देश उपदेशोऽपदेशः प्रदेशोऽतिदेशोऽपवर्जो वाक्यशेषोऽर्थापत्तिर्विपर्ययः प्रसङ्ग एकान्तोऽनेकान्तः पूर्वपक्षो निर्णयोऽनुमतं विधानमनागतावेक्षणमतिक्रान्तावेक्षणं संशयो व्याख्यानं स्वसंज्ञा निर्वचनं निदर्शनं नियोगो विकल्पः समुच्चय ऊह्यमिति ।"

चरकोक्तास्वेव पञ्चत्रिंशत्तन्त्रयुक्तिषु "पूर्वपक्षविधान"मित्येकं विभागं पूर्वपक्षः, विधानमिति विभागद्वयतया परिकल्प्य षट्त्रिंशत्तन्त्रयुक्तय इति सङ्ग्रहकारो वाहटाचार्यः प्रतिपादयति ।

तन्त्रयुक्तयष्षट्त्रिंशदितीदं वाहटमतमेव प्रस्तुतग्रन्थकर्तुर्नीलमेघभिषजोऽभिमतम् ।

सुश्रुताङ्गीकृतासु द्वात्रिंशत्तन्त्रयुक्तिषु प्रयोजनप्रत्युत्सारोद्धारसम्भवाख्याश्चतस्रो युक्तीरधिकतया योजयित्वा षट्त्रिंशत्तन्त्रयुक्तीः सङ्ग्रहकारोऽङ्गीकरोति ।

ग्रन्थकारो नीलमेघभिषक् तु तासु तन्त्रयुक्तिष्वेकैकामपि युक्तिं आनुष्टुभार्धपद्यमयैस्सूत्रैर्लक्षयित्वा तत्र तत्र शास्त्रोक्तानि वाक्यानि प्रमाणीकृत्य च सिद्धान्ततत्त्वं सुस्पष्टमवबोधयति ।

## ग्रन्थकर्ता ।

अस्य च ग्रन्थस्य कर्ता नीलमेघभिषगिति,

"वैद्यनाथ इति कल्पितनाम्ना
नीलमेघभिषजा क्रियतेऽद्य ।"

इत्यस्मात् पद्यादवगम्यते । तत्तद्युक्तिलक्षणं सलक्ष्यं संक्षिप्य वदतोऽस्य ग्रन्थकर्तुः शास्त्रे असामान्यं पाण्डित्यं "वैद्यनाथ इति कल्पितनाम्ना" इत्यंशेन प्रायोगिकचिकित्सायामनितरसाधारणं सर्वजनश्लाघनीयं वैदग्ध्यमप्यासीदित्यनुमातुं शक्यते ।

"लक्ष्यलक्षणमनुक्रममासां
लक्षितं स्वगुरुसुन्दरदृष्ट्या ।"

इत्यंशेन सुन्दरनामधेयः कश्चिदाचार्योऽस्य गुरुरिति च ज्ञायते

सुन्दराख्योऽयं प्रसिद्धस्य लक्षणामृतनाम्नो विषवैद्यग्रन्थस्य कर्ता सुन्दरभट्टाचार्यः स्यादिति प्रतिभाति ।

लक्षणामृतस्य केरळेष्वेव प्रसिद्धत्वात् तद्ग्रन्थे केरळदेशैकप्रसिद्ध-कटपयादिसङ्ख्यानिर्देशदर्शनाच्चायं सुन्दरभट्टाचार्यः केरळीय एवेत्यभ्यूहितुं शक्यते ।

केरळीयस्य सुन्दरभट्टाचार्यस्यान्तेवासित्वादस्य च नीलमेघाचार्यस्य केरळीयाभिजनत्वं युक्तमेव । केरळेष्वतिप्रशस्तत्वेन प्रथितमष्टाङ्गसङ्ग्रहं प्रमाणीकृत्य स्वग्रन्थरचनया, चरकादीनां प्राचीनाचार्याणां मध्ये सभक्ति-बहुमानं वाहटाचार्यानुस्मरणेन केरळैकप्रसिद्धस्येन्दुव्याख्यानस्य तत्र तत्र प्रमाणतयोद्धरणेन चास्य पूर्वोक्तं केरळीयाभिजनत्वं दृढीकृतं भवति ।

"आत्तबुद्धिरवलोकितेश्वरात्" इति बुद्धमतपक्षपातिनि रामगुप्ते वाह-टाचार्येऽपि

"आर्यावलोकितगुरुं पुनरार्यतारां" इति बुद्धमतानुयायिषु च सविशेषं बहुमानवतोऽप्यस्य

"शङ्करात्मानमिन्दुशेखरमाश्रये" इत्यनेनांशेन हिन्दुमतप्रसिद्धेश्वर-स्मरणात्,

"चूडाचन्द्राविनिष्यन्दि-
सुधयाभूत् प्रसाधनम् ।
गरः कण्ठे परं यस्य
स पायाद् भुवनं भवः ॥"

इत्यनेन शिवस्तुतिरूपेण लक्षणामृतपद्येन तत्कर्तुः स्वगुरोः सुन्दराचार्यस्य वैदिकमतावलम्बिनः शिष्यत्वाच्च नीलमेघभिषजो वैदिकमतानुयायित्वं व्यक्तीभवति ।

वाहटाचार्यं सभक्तिबहुमानं नित्यं पुरातनकालात् प्रभृति ध्यायद्भिः केरळीयभिषग्भिरुपयुज्यमानः

"लम्बश्मश्रुकलापमम्बुजनिभ-
च्छायाद्युतिं वैद्यकान्
अन्तेवासिन इन्दुजज्जटमुखा-
नध्यापयन्तं सदा।
आगुल्फामलकञ्चुकाञ्चितदरा-
लक्ष्योपवीतोज्ज्वलं
कण्ठस्थागरुसारमञ्जितदृशं
ध्यायेद् दृढं वाहटम् ॥"

इत्ययं छायाश्लोकः नीलमेघभिषक्कृत इति प्रस्तुतग्रन्थादवगम्यते ।

कालः ।

ग्रन्थकर्तुरस्य जीवितकालनिर्णयोपयोगि किमपि लक्ष्यं ग्रन्थतो न लभ्यते । अष्टाङ्गसंग्रहादनन्तरभवानां वैद्यग्रन्थानां स्मरणाभावादयं ग्रन्थकारस्तदनन्तरसन्निकृष्टकालजीवीति ज्ञायते ।

'सुन्दरीव्यञ्जिताकृति'मिति संग्रहविशेषणोक्त्यायमिदानीं प्रसिद्धाया अष्टाङ्गहृदयव्याख्यायाः सर्वाङ्गसुन्दरायाः कर्तुररुणदत्तस्यानन्तरजीवीति वक्तुं न शक्यते । मन्ये संग्रहस्यापि प्रसिद्धा काचित् 'सुन्दरी' इति व्याख्यासीत्, सा चैतावत्पर्यन्तमनुपलब्धेति ।

अष्टाङ्गहृदयव्याख्यायाः सर्वाङ्गसुन्दरेति नामकरणमपि संग्रहस्य प्रसिद्धां सुन्दरीव्याख्यामुपजीव्यैवारुणदत्तेन तथाकृतमिति चेदानीं प्रतिभाति ।

संग्रहकर्ता रामगुप्तवाहटो बुद्धमतावलम्ब्यासीदिति तद्ग्रन्थोदाहरणैरेव समर्थयितुं शक्यते । तस्मादयं बुद्धमतप्रचारकाले लब्धजीवितोऽभूदिति हेतोः भारतखण्डे बुद्धमतोन्मूलयितुः श्रीमच्छङ्कराचार्यात् प्राक्तन इति लक्ष्यते ।

केरळीयेन नरसिंहाचार्येण कृते रसवैशेषिकसूत्रभाष्ये केरळेषु लब्धप्रतिष्ठस्य सङ्ग्रहस्यास्मरणात् सङ्ग्रहकारो वाहटस्तदनन्तरकालोत्पन्न इति वक्तुं सुशकमेव । एवं च सङ्ग्रहकारः क्रुस्ताब्दीयाष्टमशतकपूर्वपादजीविनो

नरसिंहाचार्यादनन्तरकालिको, नवमशताब्दपूर्वार्धजीविनः शङ्कराचार्यात् प्राक्तन इति च सुस्पष्टं भवति ।

मन्ये चाहं अष्टाङ्गसङ्ग्रहादेव समग्रमप्यायुर्वेदतत्त्वं सम्यग् ज्ञातवता तस्मिंश्च चरकादिष्विव परमप्रामाण्यबुद्धिं दधानेनानेन नीलमेघभिषजा स्वगुरोः सुन्दरभट्टाचार्यस्य समानकालिकयोश्चिरात् केरळदेशमलंकृतवतोः संग्रहकर्तुः साक्षाच्छिष्ययोरिन्दुजज्जटयोः सकाशादेव तद्रूपादिकं प्रत्यक्षत इव यथावदुपलब्धमिति ।

एवं च शब्दतस्तद्रूपं साक्षात्कृतवतानेन तद्रूपध्यानपरं पूर्वोक्तं पद्यं विरचितमिति च प्रस्पष्टं विदुषाम् ।

पूर्वोक्ताभिर्युक्तिभिरयं नवमशताब्दपूर्वार्धे लब्धजीवितोऽभूदिति निर्णेतुं शक्यते । एवं च नीलमेघभिषक् शङ्कराचार्यसमकालिको भवति । 'शङ्करात्मानमिन्दुशेखरमाश्रये' इत्यनेन पद्यांशेन शङ्कराचार्यो व्यङ्ग्यमर्यादया द्योतितो वा नवेति विद्वद्भिरेव निर्णेयम् ।

प्रस्तुतग्रन्थकारोऽष्टाङ्गहृदयकर्तारं वाष्टाङ्गहृदयं वा तद्व्याख्यां वा तत्कर्तारमरुणदत्तं वा न कुत्रापि स्वग्रन्थे स्मरति । अष्टाङ्गहृदयात् प्राचीनेऽस्मिन् ग्रन्थे तत्र तत्राष्टाङ्गसंग्रहादुद्धृतानां वाक्यानामवबोधनसौकर्यार्थमष्टाङ्गहृदयाध्यायश्लोकसंख्यादिकं यद्यपि मया प्रदर्शितं तथापि तेषां वाक्यानां संग्रहाष्टाङ्गहृदययोः साधारणत्वात् तथा कृतम् । एतेन तान्यष्टाङ्गहृदयादेवोद्धृतानीति माज्ञायिषत । किन्तु अष्टाङ्गहृदये परिचयाधिक्यात् सौकर्यानुरोधेनैवमाचरितमिति पण्डितैरवगन्तव्यमित्यभ्यर्थये ।

अष्टाङ्गहृदयकर्ता वाहटो वैदिकमतावलम्बी कश्चिदाचार्य आसीदिति तत्र तत्र वैदिकमन्त्रोद्धरणात् चैत्यादिगमननिषेधाच्च ज्ञायते ।

"जिनजिनसुतताराभास्कराराधनानि
प्रकटितमलपापं कुष्ठमुन्मूलयन्ति ।"

इत्येतत् संग्रहपद्यप्रवृत्तेन्दुव्याख्यानात् जिनो बुद्ध इति जिनसुतोऽवलोकित इति चावगम्यते ।

पद्यमिदं चाष्टाङ्गहृदये "शिवशिवसुततारा भास्कराराधनानी"त्येवं विवर्तितं दृश्यते । विवर्तनं चैतत् तत्कर्तुर्वैदिकमतावलम्बित्वं बुद्धमतपराङ्मुखतां च प्रदर्शयति ।

संग्रहकारपद्ये तृतीयतया स्मृता 'तारा'-विश्वनिघण्टौ "बुद्धदेव्यां स्मृता तारा" इति दर्शनादियं काचित् प्रसिद्धा बुद्धयोगिनीति प्रतीयते। अष्टाङ्गहृदयकारस्मृता तु तारा

"अहल्या द्रौपदी सीता
तारा मण्डोदरी तथा।
पञ्चकन्यास्स्मरेन्नित्यं
महापापविनाशनम्॥"

इत्यत्रोक्ता तारा स्यात्।

"पाप्मभिः कर्मभिः सद्यःप्राक्तनै"रिति कुष्ठरोगस्य पापनिदानकत्वात् पञ्चकन्यास्वन्तर्भूतायास्तारायाः स्मरणं तच्छमनाय प्रभवतीति युक्तमेवैतत्। अथवा इह तारापदं पञ्चानामपि कन्यानामुपलक्षणम्।

एवंरीत्या विचार्यमाणेऽष्टाङ्गहृदयकर्ता वाहटाचार्यः संग्रहकर्तुः पौत्रः प्रपौत्रो वा भवेत्। इत्थमष्टाङ्गसंग्रहाष्टाङ्गहृदयकर्त्रोर्मध्यकालजीवी सुन्दरशिष्यो नीलमेघभिषङ् नवमशताब्दपूर्वार्धकालिक आसीदितीदं सर्वमुपपन्नं भवति।

शास्त्रतत्त्वावगमार्थं तन्त्रयुक्तिविचारोऽत्यावश्यकः। सङ्ग्रहकारोऽप्यस्यात्यावश्यकतां

"अधीयानोऽपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः।
नाधिगच्छति तन्त्रार्थमर्थं भाग्यक्षये यथा॥"

इति प्रतिपादयति। प्रकृतग्रन्थकर्ता च तमिमं श्लोकमनुस्मरति। तन्त्रकारेणोक्ता इमास्तन्त्रयुक्तयो यद्यपीन्दुना व्याख्यातास्तथापि तासामर्थावबोधोऽस्मादेव ग्रन्थात् सुस्पष्टो भवति। तस्मात्तन्त्रयुक्तिविचारो नामायं ग्रन्थोऽध्येतॄणामध्यापकानां पण्डितानां चोपकाराय महते स्यादिति मन्ये।

अस्य चादर्शभूतो जीर्णत्रुटितपत्रः कश्चिद्ग्रन्थः प्रसिद्धेष्वष्टवैद्येष्वन्यतमाद् ओळश ब्रह्मश्री परमेश्वरसूनोर्नारायणार्यादुपलब्धः। आदर्शान्तरालाभात् तमिममेकमेवादर्शमाधारीकृत्यास्य संशोधनं कृतम्।

वञ्चिमहामण्डलभरणनैपुणीचातुर्येण समस्तजगतामभूतपूर्वं प्रभूतं परमानन्दमनवरतं तन्तन्यमानायाः, दिव्यनामधेयमुपाधीकृत्य प्रत्यग्रं प्रवर्त्यमानायां श्रीवञ्चिसेतुलक्ष्मीग्रन्थावल्यामायुर्वेदज्यौतिषपुरातनाप्रसिद्धविशिष्टग्रन्थप्रकटनेन लोकोपकारं नितरां कलयितुमभिलषन्त्याः प्रशस्तविख्यातसम्पत्प्रचुरिमविलसद्वञ्चिवसुन्धरापालवंशालङ्कारानर्घमुक्तामणिभासुराकारायाः समधिगतसमस्तशास्त्रतत्वार्थसारायाः महोन्नतमहितमहामहिमशालिन्याः प्रत्यक्षलक्ष्म्या इव श्रीवञ्चिसेतुलक्ष्म्याः प्रसादभूतेन नियोगेनानुगृहीतोऽयं जनो यथामति परिशोध्यैतत् ग्रन्थरत्नं पण्डितवरेण्यानां समक्षं भक्तिबहुमानपुरस्सरं समर्पयति ।

विनेयो विधेयश्च,

अनन्तशयनम्,
४-७-१९२८.

कोळत्तेरि शङ्करमेनोन्.

॥ श्रीः ॥

# तन्त्रयुक्तिविचारः ।

---

आत्तबुद्धिरवलोकितेश्वरात्
सङ्घगुप्तकुलसिन्धुचन्द्रमाः ।
रामगुप्त इह वाहटाख्यया
ख्यातिमान् स भिषगाविरस्तु नः ॥

लम्बश्मश्रुकलापमम्बुजनिभच्छायाद्युतिं वैद्यकान्
अन्तेवासिन इन्दुजज्जटमुखानध्यापयन्तं सदा
आगुल्फामलकञ्चुकाञ्चितदरालक्ष्योपवीतोज्ज्वलं
कण्ठस्थागरुसारमञ्जितदृशं ध्यायेद् दृढं वाहटम् ॥

आत्रेयपूर्वमखिलादिगुरून् महर्षीन्
आर्यावलोकितगुरुं पुनरार्यताराम् ।
श्रीसङ्घगुप्तमपि वाहटरामगुप्त-
माचार्यसुन्दरमपि प्रणतोऽस्म्यजस्रम् ॥

अष्टाङ्गानामधिष्ठानं सुन्दरीव्यञ्जिताकृतिम् ।
सङ्ग्रहं शङ्करात्मानमिन्दुशेखरमाश्रये ॥

G. P. T. 1305. 500. 30-1-104. B

"अधीयानोऽपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः ।
नाधिगच्छति तन्त्रार्थमर्थं भाग्यक्षये यथा ॥"
(अ. सं. उ. ५०)

काः पुनस्ताः कियत्यश्चेत्यत्राह —

*"तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ।
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ॥
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ।
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ॥
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ।
अतीतानागतापेक्षा स्वसंज्ञोह्यं समुच्चयः ॥
निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम् ।
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः ॥
लीनव्यत्यासलेशोक्तिगदितार्थप्रकाशकाः ।
वाक्यन्यायोदधेः सारभूताः †षट्त्रिंशदीरिताः ॥"
(अ. सं. उ. ५०)

लक्ष्यलक्षणमनुक्रममासां लक्षितं स्वगुरुसुन्दरदृष्ट्या ।
वैद्यनाथ इति कल्पितनाम्ना नीलमेघभिषजा क्रियतेऽद्य ॥

अधिकरणम् (१) ।

**तत्राधारोऽधिकरणं तात्पर्यं तत्र तिष्ठति ॥ १ ॥**

यथा — 'कायबालग्रह' (अ. हृ. सू. १. १५) इत्यादौ

---

* 'तन्त्राधिकरणं' इति चरके ।

† 'पञ्चत्रिंशद्विचित्राभिर्भूषितं तन्त्रयुक्तिभिः ।' इति चरके । द्वात्रिंशदिति सुश्रुतः ।

कायादीनाधारीकृत्य तत्तद्रोगोपशमनकरी चिकित्सा वर्तते न त्ववस्थावयवभेदेन भिद्यमानानां तन्त्रस्याङ्गभूतानां कायादीनामिति तात्पर्यम् । आचार्येणापि 'चिकित्सा येषु संश्रिता' (अ. हृ. सू. १. ६) इत्युक्तं च । कायचिकित्साबालचिकित्सेत्यादिराधाराधेयसम्बन्धमात्रमेव । एवं स्थिते तन्त्रमिदमातुरापेक्षमेव । अनातुरविषयं तु दिनर्तुचर्याकथनमनुचितमेवेति चेत् तयोस्तु 'वयोहोरात्रिभुक्तानाम्' (अ. हृ. सू. १. ८) इत्यादिनामयप्रशमनादिना कालकृतदोषापेक्षम् । तस्मादुभयथाप्यातुरापेक्षमिदं तन्त्रम् । 'इतिकालस्वभावोऽयम्' (अ. हृ. सू. १२. २८) इत्याचार्येणोक्तम् । इत्यधिकरणम् ॥ १ ॥

योगः (२) ।

अथ,

**योगः पदानामेकैकमर्थौचित्येन योजना ॥ २ ॥**

यथा—'रोगं निदानप्राग्रूपलक्षण' (अ. हृ. सू. १. २२) इत्यादौ आप्तिः सम्प्राप्तिः एवं दुष्टेन एवं स्थानस्थितेन एवमनुगतेन एवं मार्गेणेत्यादिना व्याधिपरिकल्पनम् । केन वा निदानविशेषेणास्य कुपितो दोषः दोषस्य ह्येकस्यापि बहवः प्रकोपहेतवः इत्यादियुक्त्या निदानस्य दुर्विज्ञेयत्वात् प्राग्रूपेण ज्ञानं तत्र च 'लिङ्गमव्यक्तमल्पत्वाद्' (अ. हृ. नि. १. ४) इत्यादियुक्त्या । तेनापि दुर्विज्ञाने लक्षणज्ञानम् । तत्रापि—

"आशङ्का ग्रहणीदोषपाण्डुगुल्मोदरादिषु ।"

(अ. हृ. नि. ७. २०)

इति च

"मारुतामग्रहोन्मादमदान् सुसदृशाकृतीन् ।
को जानीयाच्चिकित्सेद्वा दूरभिन्नक्रियाक्रमान्॥"
(अ. सं. उ. ५०)

इति चोक्तत्वात् तेनापि दुर्लक्ष्यस्य तूपशयज्ञानम्। उपशयो नाम —

"हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ।
औषधान्नविहाराणामुपयोगं सुखावहम् ॥
विद्यादुपशयं, व्याधेः" (अ. हृ. नि. १. ६)

इत्यस्य हेतुविपरीते तु संतर्पणोत्थे अपतर्पणमौषधम् । गुरुस्निग्धशीताद्यन्नजे लघुरूक्षोष्णाद्यन्नम् । जागरोत्थे स्वापो विहारः । व्याधिविपरीते तु ज्वरे मुस्तापर्पटकादिरौषधम् । पेयादिरन्नम् ।

"ज्वरकालस्मृतिं चास्य हारिभिर्विषयैर्हरेत् ।"
(अ. हृ. चि. १. १७१)

इत्यादिविहारः । विपर्यस्तार्थकारी नाम उभयार्थकारी छर्द्यां छर्दनमित्यादि। इत्येवमुपशयज्ञानम्। एवं निदानादिचतुष्टयपरिपाटीज्ञानरूपत्वात् सम्प्राप्तेरन्तेऽभिधानम् । किञ्च सम्प्राप्तिवशाद्धि दोषत्रयस्य नानाविधरोगकारित्वम् । तेन रोगज्ञानानन्तरं भाविचिकित्साङ्गत्वात् तथाप्यन्ते पाठः । तथा हि —

"मलास्तत्र स्वैः स्वैर्दुष्टाः प्रदूषणैः ।
आमाशयं प्रविश्याममनुगम्य पिधाय च ॥"
(अ. हृ. नि. २. ३)

इत्याद्यौचित्यक्रमान्निदानानन्तरं योजना कार्या । इति योगः ॥ २ ॥

हेत्वर्थः (३) ।

**हेत्वर्थो हेतुनैव स्यात् तत्तदर्थप्रकाशनम् ॥ ३ ॥**

यथा — 'रोगस्तु दोषवैषम्यम्' (अ. हृ. सू. १. १९) इत्यादौ रोगो नाम दोषवैषम्यहेतुः । नतु दोषवैषम्यम् । तत्तु वृद्धिः क्षयो वा । अतो हेतोरेव रोगः । अत्र तुशब्देन रोगोऽपि दोषवैषम्यस्य हेतुरिति द्योतयति । उक्तं चागन्तुप्रकरणे कथं— 'तेषु प्रहारेण पूर्वं रुजासम्भवः ततो दोषवैषम्यम्' (अ. सं. सू. २२) इति । तेन रोगोऽपि रोगस्य हेतुः यथा ज्वरो रक्तपित्तस्य रक्तपित्तं वा ज्वरस्य इत्येवमादिर्हेत्वर्थः ॥ ३ ॥

पदार्थः (४) ।

**पदार्थस्तु पदैक्येऽपि भिन्नमर्थं प्रकाशयेत् ॥ ४ ॥**

यथा — 'कोष्ठः क्रूरो मृदुर्मध्यः' (अ. हृ. सू. १. ९) इत्यादौ कफोत्तरः कोष्ठो मध्यः समकोष्ठोऽपि मध्यः अत्र मध्यपदस्य न भेदः अर्थतस्तु मध्य इति सम एव । कथं —

"सुधाद्यैर्वातिकः (कोष्ठः) शम्याकाद्यैस्तु पैत्तिकः ।
श्यामाद्यैः श्लैष्मिको रेच्यः पथ्याद्यैः समदोषजः ॥"

इति *भेळकल्पोक्तत्वात् । समदोषजकोष्ठात् कफकार्यकोष्ठस्य-तावान् भेदोऽस्त्येव यावांस्तदुत्कर्षः । आचार्येणापि लाघविकत्वात् पदैक्यमङ्गीकृत्य 'कोष्ठस्तु त्रिविधो भवति मृदुः क्रूरो मध्यश्च' (अ. सं. सू. २५) इति कथितम् । अत्र विरेचनप्रस्तावोक्त्या पित्तकोष्ठस्य प्रथमग्रहणम् । अत्रापि तुशब्देन समदोषजपर्यायान्मध्यकोष्ठस्यात्रान्तर्भावः सूचित एव ।

---

* मुद्रितभेळग्रन्थे पद्यमेतन्न दृश्यते ।

"समं मध्यं च तुल्यं च समानं सदृशं सदृक् ।"

इति गोपालिकायामुक्तं च । अनेनाग्निरिव तदाश्रयः कोष्ठोऽपि चतुर्विध इत्यर्थः ।

केचित्तु

"पदार्थः पदभेदेऽपि न भेदः पुनरर्थतः ।"

इति । तन्मते तु द्रव्यौषधयोः पदभेद एव नार्थभेदः । यतः 'भिषग्द्रव्याणि' (अ. हृ. सू. १. २६) इत्यादिना 'बहुकल्पम्' (अ. हृ. सू. १. २८) इत्यादिना च सामान्येन द्रव्यौषधयोरभेद उक्तः । उक्तं च तान्त्रिकैः —

"यस्मिन् रसादयो यच्च भौतिकीं मूर्तिमाश्रितम् ।
तद् द्रव्यं रसकल्कादि कल्पनासिद्धमौषधम् ॥"

एतावानवस्थाविशेषः एवमन्यत्र 'शमनं कोपनम्' (अ. हृ. सू. १. १६) इत्यादिना 'शोधनं शमनम्' (अ. हृ. सू. १. २४) इत्यादिना च तयोरेव भेदाभास एव । उक्तं ह्याचार्येणापि 'द्विविधमौषधम् ऊर्जस्करं रोगघ्नं च । ऊर्जस्करमपि द्विविधं रसायनं वाजीकरणं च । रोगघ्नमपि द्विविधं रोगस्य प्रशमनमपुनर्भवकरं च । पुनश्च द्विविधं द्रव्यमद्रव्यं च । तत्र त्रिविधं द्रव्यं भौममौद्भिदं जङ्गमं चेति । तेषु तद्वक्ष्यमाणलक्षणं हेमादिलवणान्तमेतत् प्रायेण भौमम् । औद्भिदं पुनर्वनस्पतिवानस्पत्यवीरुदोषधिभेदेन चतुर्विधं भवति । तत्र फलिनो वनस्पतिः । पुष्पफलवान् वानस्पत्यः । वल्लीगुल्मं वीरुत् । फलपाकान्ता चौषधिरिति । जङ्गमोद्भवं मधुघृतादि । अद्रव्यं पुनरुपवासादि' (अ. सं. सू. अ. १२) इति तस्मादनयोर्नार्थभेदः । इति पदार्थः ॥ ४ ॥

प्रदेशः (५) ।

**प्रदेशः क्वचिदुक्तानामन्यत्रोक्तैः समेतता ॥ ५ ॥**

यथा—'कालार्थ' (अ. हृ. सू. १. १९) इत्यादौ कालः शीतोष्णवर्षलक्षणः, अर्थाः शब्दादय इन्द्रियार्थाः, कर्म कायवाङ्मनोभेदेन परत्र वेह वा कृतम् । तेषां हीनयोगातियोगमिथ्यायोगाः । हीनयोगोऽल्पः संयोगो नैव वा । अतियोगोऽतिमात्रम् । मिथ्यायोगो विपरीतलक्षणः । ते तु वातादिसमवेता एव रोगकारणं भवन्ति । वातादयोऽपि हीनयोगादिसमवेता एव । अतः खल्वाचार्यस्य कालार्थकर्मेत्यादिश्च दोषा एव । हीनेत्यादिश्च रोगैककारणमित्युक्तिबलात् तयोरेकैकमिति यत् तदुभयमपि समवेतमेव रोगकारणं न पृथक् कारणमित्यर्थः । अतो रोगकारणस्य वातादिकोपस्य कालादिहीनयोगादयः प्रधानकारणमिति कारणे कार्योपचारः । इति प्रदेशः ॥ ५ ॥

उद्देशः (६) ।

**उद्देशः समवायोक्तिरिति प्राहुर्मनीषिणः ॥ ६ ॥**

यथा— सर्वथा वेगधारणं न कार्यमिति प्रतिपादनाय लाघविकेनापि सर्वानुग्राहकेणाचार्येण 'वेगान्न धारयेत्' (अ. हृ. सू. ४. १) इत्यादौ तत् पद्यमाकाङ्क्षाविषयमुद्दिष्टम् । इत्युद्देशः ॥ ६ ॥

निर्देशः (७) ।

**निर्देशः स्याद् विवरणं पूर्वोक्तानामनुक्रमात् ॥ ७ ॥**

यथा— वातवेगधारणे कृते गुल्मादयो जायेरन्, एवं

विड्रोधादिष्वपि ज्ञेयम् 'अधोवातस्य रोधेन' (अ. हृ. सू. ४. २) इत्यादिना निर्दिष्टम्। पूर्वं वात इत्युद्दिश्य पश्चादधोवातस्येति विशेषग्रहणं पश्चादुद्गारवातविवक्षयेति बोद्धव्यम् । उद्देशनिर्देशयोरन्योन्यापेक्षिता स्यादेव । इति निर्देशः ॥ ७॥

वाक्यशेषः (८) ।

**वाक्यशेषो विशिष्टार्थदायिनी वाक्यलक्षणा ॥ ८ ॥**

यथा — 'रोगानुत्पादनीयम्' (अ. हृ. सू. ४) इत्यनेन रोगोपशमनीयो ह्ययमध्याय इति लक्ष्यते । अन्यथा 'अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः' (अ. हृ. सू. ४. ३४) इति वाक्यस्यानुचितत्वं स्यादेव । किञ्च 'धारयेत्तु सदा वेगान्' (अ. हृ. सू. ४. २५) इत्ययमनुचित एव। इति वाक्यशेषः ॥ ८ ॥

प्रयोजनम् (९)।

**प्रयोजनमनेकार्थसिद्ध्यै पदनिवेशनम् ॥ ९ ॥**

यथा—'वायुः पित्तं कफश्च' (अ. हृ. सू. १. ६) इत्यादिना पदनिवेशने ते वातादयः पृथगपि दोषाः चशब्दात् समवेता अपि दोषाः। समासत इति आमपूयादयो विस्तरतोऽपि दोषाः। इति अनेन प्रकारेण । प्रकारान्तरेण रजस्तमश्चेत्यादिना तयोरपि दोषत्वम्। त्रय इति वातादिभेदानामपि दोषत्वं लक्षितम् । एवमनेकार्थसिद्धिः । इति प्रयोजनम् ॥ ९ ॥

उपदेशः (१०)।

**उपदेश इदन्त्वेवमेवन्त्वादीनकल्पना ॥ १० ॥**

यथा—

"यस्माद् दृष्टो यवस्स्वादुर्गुरुरप्यनिलप्रदः।
दीपनं शीतमेवाज्यं वसोष्णाप्यग्निसादनी ॥
कटुपाकोऽपि पित्तघ्नो मुद्गो माषस्तु पित्तलः ।
स्वादुपाकोऽपि चलकृत् स्निग्धोष्णं गुरु फाणितम् ॥
रसः स्वादुर्यथा चैवं तथान्येष्वपि दृश्यते ।
वातलं कफपित्तघ्नमम्लमप्यक्षकीफलम् ॥
कुरुते दधि गुर्वैव वह्निं पारावतं न तु ।
कपित्थं डाडिमं चाम्लं ग्राहि नामलकीफलम् ॥
कषाया ग्राहिणी शीता धातकी न हरीतकी ।
अप्रधानं पृथक् तस्माद् रसाद्याः संश्रितास्तु ते ॥
प्रभावश्च यतो द्रव्ये द्रव्यं श्रेष्ठमतो मतम् ।"

(अ. सं. सू. १७)

इत्याचार्येणैव प्रतिपादितं द्रव्यमिति प्रभावपरम् । 'द्रव्यमिति प्रभावपरनामा द्रव्यशक्ति'रितीन्दुनापि प्रतिज्ञातम् । प्रभाव-शक्त्योरग्न्यूष्मणोरिव भेदः कल्प्यः । इत्युपदेशः ॥ १० ॥

अपदेशः (११) ।

**अपदेशस्तु कण्ठोक्तं वाक्यमर्थेन दर्शयेत् ॥ ११ ॥**

यथा—'उष्णोदकोपचारी स्यात' (अ. हृ. सू. १६. २५) इत्यादौ शीतोदकं न स्पृशेदिति । व्यवायं न सेवेत, दिवा न स्वप्यात्, इत्यादौ पुनरहःस्वप्ननिषेधस्तु दिवास्वप्नोचितानापपि स्नेहविषये निषेधप्रातिपादनाय । इत्यपदेशः ॥ ११ ॥

अतिदेशः (१२) ।

**अतिदेशस्तु पूर्वोक्तन्यायस्यान्यानुषङ्गिता ॥ १२ ॥**

यथा — 'रोगाः सर्वेऽपि जायन्त' (अ. हृ. सू. ४. २३) इत्यादौ वेगधारणानुषङ्गेण वेगोदीरणस्य तस्य(व ? वा)ग्रहणे सर्वरोगजनकप्राधान्यं सूचितम् । उदीरणं धारणं च प्रयत्नविशेषः । अत्र बहुवचननिर्देशो वेगलक्षितान् वातादीनुद्दिशति । इत्यतिदेशः ॥ १२ ॥

अर्थापत्तिः (१३) ।

**अर्थापत्तिः सहोक्तेभ्योऽप्येकस्यार्थोऽन्यथापतेत् ॥ १३ ॥**

यथा —

'आमविष्टम्भयोः कोष्णं निष्पिपासोऽप्यपः पिबेत् ।"

(अ. सं. सू. ६)

इत्यनेन विदग्धे दुष्टपित्तोपशमनाय पिपासितस्यैव 'शृतशीतोदकं दद्यादि'त्यर्थादापतितम् । उष्णशीतस्वादुपाकत्वं च शीतवीर्यत्वं च साधारणमेव ।

"पाके स्वादु हिमं वीर्ये तदुष्णमपि योजितम् ।
तस्मादयोगपानेन लाघवान्न वियोजयेत् ॥"

(अ. सं. सू. ६)

इत्युक्तत्वात् । 'लाघवान्न वियोजयेत्' इत्यस्य 'स्वल्पत्वं तस्य *न चापतेयम्' इतीन्दुनापि व्यख्यातम् । इत्यर्थापत्तिः ॥ १३ ॥

निर्णयः (१४) ।

**निर्णयः स्थापयेदर्थमनेकविधमेकधा ॥ १४ ॥**

---

* 'न चालनीयम्' इति मुद्रितपाठः. ।

यथा — 'वीर्यं तु केचिद् गुरुलघुस्निग्धरूक्षमन्द-तीक्ष्णशीतोष्णभेदादष्टविधमाहुः । अपरे पुनर्बहुवीर्यवादिनः पठन्ति'—

"वीर्यं द्रव्यस्य तज्ज्ञेयं यद्योगात् क्रियते क्रिया ।
नावीर्यं कुरुते किञ्चित् सर्वा वीर्यकृता हि सा ॥"

(अ. सं. सू. १७)

इति । 'तैरपि चैवमतिप्रकृष्टशक्तियुक्तानामशेषौषधगुणसार-भूतानामष्टानामेव गुर्वादीनां वीर्यसंज्ञा विशिष्टास्नायविहि-तापि लौकिकीति समुद्भाव्यते । तथाहि । तया रसविपाक-गुणान्तरविजयिनो भूयांसश्च वरिष्ठाश्च गुणाः संगृहीताः । विशेषवृत्त्या च तत्र तत्र द्रव्यस्वरूपकथने व्यवहारः प्रवर्तितो भवति । अतएव सर्वातिशायी द्रव्यस्वभावः प्रभाव इत्या-म्नातः । सत्यपि च क्रियानिवर्त्तनसामान्ये तद्वीपरीता रसा-दयो वीर्याख्यया प्रभावसंज्ञया वा न परामृश्यते ।

अन्ये तु गुर्वादीनामग्नीषोमात्मकत्वाद् आदानविसर्ग-विभागेन कालस्य चोष्णशीतात्मकत्वाद् द्विविधमेवामनन्ति । एवं चाहुः—

"नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ।
व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ॥"

तत्रोष्णं दहनपचनस्वेदनविलयनानिलकफशमनादीनि क-रोति । शीतं ह्लादनस्तम्भनजीवनरक्तपित्तप्रसादनादीनि क-रोति' (अ. सं. सू. १७) इति वीर्यद्वैविध्यमाचार्येण स्थापितम् 'उष्णशीतगुणोत्कर्षादि'त्यादिना वाक्येन । इति निर्णयः॥१४॥

### प्रसङ्गः (१५) ।

**प्रसङ्गः पूर्वमुक्तानां भूयोऽपि प्रतिपादनम् ॥ १५ ॥**

यथा—'आमाशयं प्रविश्याममनुगम्य'(अ. हृ. नि. २. ४) इत्यादिना प्रोक्तमर्थम् 'आमाशयस्थो हत्वाग्निम्' (अ. हृ. चि. १. १) इत्यादिना भूयोऽपि प्रतिपादितवानाचार्यः । तत्र तु एवंभूतस्य ज्वरस्य लङ्घनं कार्यं नेतरस्येति 'शुद्धवात' (अ. हृ. चि. १. २२) इत्यादिना वक्ष्यति । इति प्रसङ्गः ॥ १५ ॥

### एकान्तः (१६) ।

**एकान्त एवमेवैष नान्यथेति व्यवस्थितिः ॥ १६ ॥**

यथा —

"अष्टादशाष्टदशकान् वस्तीनां यो निषेवते ।
विधिना ना यथोक्तेन स भवेदरुजोऽजरः ॥"
(अ. सं. सू. २८)

इत्यत्र कर्मकालयोगाख्यानां स्नेहवस्तीनां यो निषेवते अष्टादशकान् विधिना, 'प्राक् स्नेह एकः पञ्चान्त' (अ. हृ. सू. १९. ६३) इत्यादिना ग्रन्थोक्तप्रकारेणाष्टादश पर्यायान् सेवेत इत्यनेन क्रमेणानुवासनानि त्रीणि शतानि चतुर्विंशत्यधिकानि भवन्ति इत्येष कर्मवस्तिः । सौश्रुते तूक्तमष्टादशविधत्वमस्य ।

"दत्तस्तु प्रथमो वस्तिः स्नेहयेद् वस्तिवङ्क्षणौ ।
सम्यग् दत्तो द्वितीयस्तु मूर्धस्थमनिलं जयेत् ॥

*बलं वर्णं च जनयेत् तृतीयोऽथ विशेषतः ।
चतुर्थः स्नेहति रसं रक्तं स्नेहति पञ्चमः ॥
मांसं स्नेहति षष्ठस्तु मेदः स्नेहति सप्तमः ।
†अष्टमो नवमश्चैवमस्थि मज्जानमेव च ॥
तथा शुक्रास्रगान् दोषान्नवापि नव वस्तयः ।
(सु. चि. ३७. ७४)

वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयम् ॥
बीजासमर्थं रेतोऽस्रं स्वलिङ्गैर्दोषजं वदेत् ॥"
(अ. हृ. शा. १. १०)

इत्याद्यनेन शुक्रास्रगा नव दोषाः ज्ञातव्याः । मलशब्देन मूत्रशकृद्गन्धावुक्तौ इत्यष्टादशकम् एवं वस्तयस्त्रिंशत् पृथगीरिताः। 'नासेवेत' इति पुंस्त्रियोर्ग्रहणम् । अन्यत्रापि—

"दद्यान्निरूहान्तरितांस्त्रीन्नवाष्टादशैव तु ।
स्नेहवस्तिक्रमो ह्येष शुक्ररक्तप्रसादनः ॥"

इत्यत्र त्रीन्नवेति द्वादशास्थापनानि अष्टादशेति स्नेहवस्तयः। सान्वासनानीति सहशब्दः प्राधान्ये सेन्द्राः सुरा

---

* 'जनयेद्बलवर्णौ च तृतीयस्तु प्रयोजितः ।
रसं चतुर्थो रक्तं तु पञ्चमः स्नेहयेत्तथा ॥
षष्ठस्तु स्नेहयेन्मासं मेदः सप्तम एव च ॥'
इति मुद्रितसौश्रुतपाठः ।

† 'अष्टमो नवमश्चास्थि मज्जानं च यथाक्रमम् ।
एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत् ॥'
मुद्रितसुश्रुते ।

इव । अग्रकालवस्तेस्तु कालः पञ्चदशेत्यादिनोक्तप्रकारेण शतम् । अशीतिस्नेहा नवतिरास्थापनानीति सर्वं सप्तत्यधिकं शतद्वयम् अत्र वस्तिरिति निरूहः। योगवस्तेस्तु योगोऽष्टौ वस्तयोऽत्रेत्यादिनोक्तप्रकारेण नवति स्नेहाः पञ्चाशच्चत्वार्यास्थापनानि चतुश्चत्वारिंशदधिकं शतं विद्यात् । तेन मरुच्छमं न प्रधानं कर्मादीनामुत्कृष्टदोषनिर्हरणार्थम् अङ्गभूतान्यास्थापनानि । यतः —

"स्नेहेन रौक्ष्यं लघुतां गुरुत्वा-
दौष्ण्याच्च शैत्यं पवनस्य हत्वा ।
तैलं दधात्याशु मनःप्रसादं
स्नेहं बलं वर्णमतीव पुष्टिम् ॥"

इतिवचनात् । तत्रैव

"अन्यजन्मकृतं कर्म दैवं पौरुषमैहिकम् ।
विद्यात्ते कर्मणी त्रेधा श्रेष्ठमध्यावरत्वतः ॥"

इत्याद्युक्तन्यायेन

"दैवपौरुषकर्मभ्यामुत्कृष्टाभ्यामुदीरितात् ।
व्याधीन् जित्वा बलं कुर्यात् कर्मवस्तिस्ततः स्मृतः ॥
ताभ्यामेव च मध्याभ्यामथानियतकालजान् ।
व्याधीन् जित्वा सुखं कुर्यात् कालवस्तिस्ततः स्मृतः ॥
अथाभ्यामेवावराभ्यां यो व्याधीन् विनिहत्य तान् ।
देहं सुखायुषा युञ्ज्याद् योगवस्तिस्ततः स्मृतः ॥"

इत्येकान्तः ॥ १६ ॥

नैकान्तः (१७) ।

**एवं स्यादथवा नैवामिति नैकान्त ईरितः ॥ १७ ॥**

यथा — 'शीते वसन्ते च' (सु. चि. ३७.५१) इत्यादि शीतवसन्तयोर्हेमन्तशिशिरवसन्तेषु दिवाऽनुवासयेत्। अन्यदा ग्रीष्मवर्षाशरत्सु रात्राविति सिद्धम् । केचिच्छीते वसन्ते च रात्रावन्यदा दिवेति । अन्ये पुनः केचिच्छब्दस्य काकाक्षिन्यायमापाद्य केचित् सर्वदा रात्राविति । केचित्तु तत इति रात्र्युत्तरकालस्यान्यदात्वमापाद्य सर्वदा दिवेति । तेन शीते वसन्ते च दिवा ग्रीष्मवर्षाशरत्सु रात्राविति एकः पक्षः। सर्वदारात्रावित्येकः पक्षः। सर्वदा दिवेत्यन्यः । इति पक्षत्रयम् । दिवापक्ष एवमाह—

*"न रात्रौ प्रणयेद् वस्तिं दोषोत्क्लेशो हि रात्रितः ।
स्नेहवीर्यमतः कुर्यादाध्मानं गौरवं ज्वरम् ॥
अह्नि स्थानस्थिते दोषे वह्नौ चान्नरसान्विते ।
स्फुटस्रोतोमुखं देहं स्नेहौजः परिसर्पति ॥"

(सु. चि. ३७)

अन्यस्तु

"न दिवा योजयेद् वस्तिं दिवा स्वप्नप्रसङ्गतः ।
दिवा स्वप्नो हि कुरुते कफपित्तात्मकान् मलान् ॥
शीते वसन्ते च दिवाऽनुवास्यो
रात्रौ शरद्ग्रीष्मघनागमेषु ।
तानेव दोषान् परिरक्षता; ये
स्नेहस्य पाने परिकीर्तिताः प्राक् ॥"(च.सि.१.२२)

इति । स्नेहपानदोषाश्च —

* 'रात्रौ वस्तिं न दद्यात्तु दोषोत्क्लेशो हि रात्रिजः ।
स्नेहो वीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम् ॥'
इति मुद्रितसौश्रुतपाठः ।

"अत्युष्णे तु दिवा पीतो वातपित्ताधिकेन वा ।
मूर्छां पिपासामुन्मादं कामिलां च समीरयेत् ॥
शीते रात्रौ पिबन् स्नेहं नरः श्लेष्माधिकोऽपि वा ।
आनाहमरुचिं शूलं पाण्डुतां च समृच्छति ॥"

(च. सू. १३. २०)

आचार्योऽपि मतमिदमङ्गीकृत्य 'शिशिरवसन्तयोर्दिवा' (सं. सू. २८) इत्यादिना पूर्वमुक्तवान् । पुनश्च दोषानुसारेणाह—

"अल्पपित्तकफं रूक्षं भृशं वातरुजार्दितम् ।
भुक्तं जीर्णाशनं कामं रात्रावप्यनुवासयेत् ॥"

(सं. सू. २८)

भुक्तमिति जीर्णाशनं, भुक्तमन्यथा—

"अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम् ।
सरदूरगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते ॥
तेन वायोर्जयो न स्याद् वातधामन्यतिष्ठता ।
कायाग्नेराशु नाशश्च विशेषादनिवर्तनात् ॥
*स्नेहः सद्योशिताहाररुद्धे त्वामाशयेऽनिलम् ।
पक्वस्थं हन्ति पक्वस्थश्च्यवते चान्नपाकत ॥
भुक्तवाननुवास्योऽस्मान्न निरूह्यस्तु भुक्तवान् ।
निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि ॥
तावन्न मूर्छितौ तीक्ष्णावधोऽन्नेन सहागतौ ।
ऊर्ध्वं वा शकृता सार्धं संस्थितौ कोष्ठ एव वा ॥

* मुद्रितसंग्रहे इदमेकं पद्यमधिकं दृश्यते ।

सममाहारविष्टब्धौ हरेतामाशु जीवितम्।"
अवेक्ष्य वा दोषादीनीति चाचार्यपक्षः। इति नैकान्तः॥ १७॥
(अ. सं. सू. २८)

अपवर्गः (१८)।

अपवर्गस्त्वनौचित्यादितरोक्त्यपवर्जनम् ॥ १८ ॥

यथा—'रसाः स्वादु' (अ. हृ. सू. १-१४) इत्यादिना रसषट्कमुक्तमाचार्येण "असंख्येया रसा इति काङ्कायनः"। 'एको रस इति भद्रकाव्यः' (च. सू. २६-८) तत्पक्षास्त्वेवमाहुः—

"मधुरस्कन्धनिर्दिष्टघृतहेमगुळादिषु ।
रसा[1] स्वाद्वादिभेदेन रसषट्कं न युज्यते ॥
अस्तु भेदादसंख्यत्वमैक्यं वा स्वादुलक्षणात् ।
भूतोत्कर्षापकर्षेण भेदो योऽल्पेन कथ्यते[2] ॥
सङ्कीर्णत्वात् फले चासौ तुल्यत्वान्न विवक्ष्यते ।
गुर्वादीनां विशेषेऽपि स्वजातेरनतिक्रमात् ॥
संख्याभेदो यथा नास्ति रसानामपि स क्रमः ।
दृष्टं मुखोपलेपादि यत् सर्वेषु घृतादिषु॥
नच तद्दाडिमाद्येषु षडेवातो रसाः स्मृताः ।
आनन्त्यैकत्वयोश्च स्यान्न विचित्रार्थतन्त्रणम् ॥"
(अ. सं. सू. १७)

इत्यनेनेतरापवर्जनेन "रसः स्वल्पाप्यः प्रागव्यक्तश्च। स षड्ऋतुकत्वात् कालस्य, महाभूतगुणैर्न्यूनातिरिक्तैः संसृष्टो

---

१. 'गुणाः' इति, २. 'कल्प्यते' इति च पाठभेदः।

विषमंविदग्धः षोढा पृथग्विपरिणमते मधुरादिभेदेन।" (अ. सं. सू. १८)

"क्रमेण तिक्तः शिशिरे, कषायो
वसन्तकाले, कटुको निदाघे।
अम्लोऽथ वर्षासु, पटुस्तदन्ते
स्वादुर्हिमे चेत्युदभावि भूतैः॥"

इत्यादिना च रसषट्कत्वं स्थापितमाचार्येण। इतरापवर्जितम्। इत्यपवर्गः॥ १८॥

विपर्ययः (१९)।

**उक्तार्थवैपरीत्येन लक्षणं स्याद् विपर्ययः॥१९॥**

यथा —'ज्वरोपद्रवतीक्ष्णत्वम्' (अ. हृ. नि. ५४) इत्यादिना सामज्वरलक्षणं प्रदर्श्य तद्विपर्यासेन पक्वज्वरलक्षणं प्रदर्शितम्। तत्र तु "सप्तरात्र"मिति लक्षणान्तरकथनं तदर्वागपि पक्वज्वरलक्षणं यदि न प्रतिपत्तव्यम्।

"सप्ताहे[1]नैव पच्यन्ते [2]सप्तधातु गता मलाः।"

(च. चि. ३. २७२)

इति वचनात् सप्ताह एव पक्वलक्षणमङ्गीकार्यम्।

"चिरेणापि हि पच्यन्ते सन्निपातज्वरे मलाः।"

इति वचनात् सप्ताहादूर्ध्वमप्यामलक्षणं चेत् तदा पाचनकषायः कल्पनीय इति तात्पर्यम्। इति विपर्ययः॥१९॥

---

१. 'हेन हि' इति, २. 'सर्वधातुगता' इति च मुद्रितचरके।

केचिदत्र सन्धिविशेषादकारमापाद्याविपर्यय इत्याहुः । तत्पक्षे तु —

(अविपर्ययः ।)

अपेतविपरीतार्थमविपर्ययमादिशेत् ।

यथा —

"मारुते[1] लवणं सर्पिः पित्ते केवलमिष्यते ।
वैद्यो दद्याद् बहुकफे क्षारत्रिकटुकान्वितम् ॥"
(अ. सं. सू. २५)

इति ।

"न सर्पिः केवलं पित्ते पेयं सामे विशेषतः ।
सर्वं ह्यनुव्रजेद् देहं हत्वा संज्ञां च मारयेत् ॥"
(च. सू. १३. ७४)

इत्यनेन विरोध इति । सत्यं तन्न । स्नेहपाने विचारणा वाच्छपानमिति द्विधा प्रयोगः । 'युक्त्यावचारयेत् स्नेहं भक्ष्याद्यन्नेन' (अ. सं. सू. २५) इत्यादिना प्रोक्ता विचारणा । अच्छस्तु —

"यथोक्तहेत्वभावाच्च नाच्छपेये विचारणा ।
स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशुसाधनात् ॥"
(अ. सं. सू. २५)

इति द्विविधम् । अल्पमात्रं चार्यत इति चारणा । अस्याच्छपेयस्य तु मात्राभेदोऽस्ति —

"द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ।
ह्रस्वमध्योत्तमा मात्रास्ता ........।" (अ. सं. सू. २५)

इति कल्पिताः ॥

---

१. 'वाते सलवणं' इति पाठभेदः ।

"ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहु ।"
(अ. सं. सू. २५)

इत्युत्तममात्रस्याच्छपेयस्यावस्था कल्पिता । 'शमनः क्षुद्वतोऽनन्न' (अ. हृ. सू. १६–१८) इत्यादिना च मध्यहृस्वयोः कल्पिता ।

"बृंहणोरसमद्याद्यैस्सभक्तोऽल्पो हितः, स च ।
बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ।
स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ।
मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥"

किञ्च,

"स्नेहः प्राग्भोजनात् कुर्यादूरुजङ्घाकटीबलम् ।
वेगानुलोम्यमारोग्यमधःकायगदक्षयम् ॥
मध्ये बृहत्त्वाग्निबलस्थिरताकुक्षिरुक्छमान् ।
इन्द्रियस्थिरतामूर्ध्वमूर्ध्वजत्रुगदक्षयम् ॥"
(अ. सं. सू. २५)

तेष्वपि दोषबलादीन्यवेक्ष्य

"मारुते लवणं सर्पिः पित्ते केवलमिष्यते ।"

इत्यस्य सभक्तस्य यामद्वयजरणलक्षणमात्रस्य केवलस्याच्छपानस्य विषयत्वम् । इन्दुनापि केवलस्याच्छं बहु चेति व्याख्यातम् । तदच्छं पित्तोद्रिक्तस्य स्वभावत एव तीक्ष्णाग्नेः शुद्धये न पेयमेव तथा सति —

"स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृतः[1] ।
स्नेहमाशु जरां नीत्वा पुनरोजोऽभितश्चरन् ॥

१. 'तीव्रतरीकृतः' इति पाठभेदः ।

उदीरयेत् सोपसर्गा पिपासामस्य बाधिकाम् ।
सोऽसूंस्त्यजेद् यदुदकं न पिबेदाशु शीतलम् ॥
शीतसेकावगाहादींश्च तृष्णापीडितो भजेत् ।
स्नेहाग्निना दह्यमानः स्वविषेणेव पन्नगः ॥"

(अ. सं. सू. २५)

इत्युक्तत्वात् सामे विशेषतोऽच्छं न पेयम् । यदा तु

"अजीर्णे, बलवत्यां तु शीतैर्दिह्यात् सिरामुखम् ।
छर्दयेत् तदशान्तौ वा पीत्वा शीतोदकं पुनः ॥
रूक्षान्नमुल्लिखेद् भुक्त्वा तादृश्यान्तु कफानिले ।
समदोषश्च निश्शेषं स्नेहमुष्णाम्बुनोद्धरेत् ॥"

(अ. सं. सू. २५)

तस्मात् पित्तकृतैः पित्तोद्रेके रोगे काले तीक्ष्णाग्नेः शुद्धये बहुमात्रमच्छं न पेयम् । तस्य तु योग्याः —

"महादेहानलबलक्षुत्तृट्क्लेशसहिष्णुभिः ।
गुल्मोदावर्तवीसर्पसर्पदंशाभिपीडितैः ॥
उन्मत्तैः कृच्छ्रमूत्रैश्च महती शीघ्रमेव सा ।
सर्वमार्गानुसारेण जयेद् व्याधीन् सुयोजिता ॥"

(अ. सं. सू. २५)

इत्यत्र पैत्तिको न परिगृहीतः । तस्य तु स्नेहपरिहारासहिष्णुत्वाद् बृंहणं शमनं शस्तम् । अथवा "ताभ्यश्च ह्रसीयसीं कल्पयेत्" इति युक्त्या तदुचिता कापि मात्रा कल्पनीया ।

"पञ्चचतुःस्नेह(प)स्य मुहूर्तैर्न्यूनपादिकैः ।
पाकं याति समे त्वग्नौ विकल्प्यं मन्दतीक्ष्णयोः ॥"

इति हि तन्त्रोक्तिः । अन्यच्च —

"त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ।"

(अ. सं. सू. २५)

इत्यत्र मध्यकोष्ठस्य पातुः पञ्चषडहेष्वेकः कल्प्यत एव । "मात्राया न व्यवस्थास्ति" इत्यादिश्चाचार्यव्यवहारः । तस्मादत्राविपर्ययः ॥ १९ ॥

पूर्वपक्षः (२०) ।

पूर्वपक्षस्तु पूर्वेषां पक्षेष्वप्यात्मपक्षता ॥ २० ॥

यथा— 'चय एव जयेद् दोषान्' (अ. हृ. सू. १३. १५) इत्यादौ चयकाल एव कुपितदोषाविरोधेन दोषाञ्जयेत् । चयो द्विविधः । कालजोऽपथ्याहारतश्च ।

"इति कालस्वभावोऽयमाहारादिवशात् पुनः ।
चयादीन् यान्ति सद्योऽपि दोषाः कालेऽपि वा न तु ॥"

(अ. हृ. सू. १२. २८)

इत्याचार्यवचनात् अपथ्याहारजं दोषचयं तत्काल ए(व) शमयेत् । कालजं तु—'शीतोद्भवं दोषचयं वसन्त' (अ. हृ. सू. ४. ३५) इति वचनात् कोपकालादावेवमुन्मार्गतायाः पूर्वमित्याशु प्रयोगः । तदा शोधयेत् चय एव इत्यत्र एवशब्दादेतद् द्योतयति —

"चयकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिताः ।
प्रायशः सुचिरेणापि भेषजद्वेषिणो गदान् ॥"

इत्यतो हेतोः सद्यः शमयेत् । तथा

"सर्वकोपे बलीयांसं शेषदोषाविरोधतः ।
क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले ॥
वातादीनां यथापूर्वं यतः स्वाभाविकं बलम् ।"
(अ. सं. सू. २१)

अस्य संवादः—

"ऊचे पराशरोऽप्यर्थममुमेव प्रमाणयन् ।
यथोपन्यासतः प्राप्तमादौ दोषभिषग्जितम् ॥
नेतृभङ्गेन दृष्टो हि समं सैन्यपराजयः ।"
(अ. सं. सू. २१)

पक्षान्तराणि

"स्थानतः केचिदिच्छन्ति प्राक् तावच्छ्लेष्मणो वधम् ।
शिरस्युरसि कण्ठे च प्रलिप्तेऽन्नरुचिः कुतः ॥
तदभावे कथं भोज्यपेयद्रव्यावचारणम् ।
असत्यभ्यवहारे च कुतो दोषविनिग्रहः ॥
तस्मादादौ कफोघात्यः कायद्वारार्गलो हि सः ।
मध्यस्थायि यतः पित्तमाशुकारि च चिन्त्यते ॥
अतो वायुसखस्यास्य कुर्यात् तदनु निग्रहम् ।
अत एव च पित्तादिः कफान्तोऽन्यैः क्रमः स्मृतः ॥
सुश्रुतस्य[1] न सर्वत्र मतमेतद् ब्रवीमि[2] तु ।
जयेज्ज्वरेऽतिसारे च क्रमात् पित्तकफानिलान् ॥

---

१. 'श्च' इति मुद्रितसंग्रहपाठः । २. 'ब्रवीति' इति पाठभेदः ।

प्रायेण तापात्मतया ज्वरे तेजो विशिष्यते ।
विशेषाद्[1] विसरं पित्तात् तथाच्च मृदुकोष्ठता ॥
तस्य चानुबलः श्लेष्मा गौरवापक्तिजाड्यकृत् ।
वायुश्च वर्धतेऽवश्यं यत्स्वहस्तु[2] तयोः क्षये ॥
ज्वरातिसारयोस्तस्मादेष दोषजये क्रमः ।
कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि ॥
तस्मादामाशयोत्क्लेशाद् भूयिष्ठं तत्समुद्भवः ।
क्रमेणाद्येन" (अ. सं. सू. २१)

इति पित्तादिना अनन्तरेष्वात्मपक्षान्तर्भावः ।

"तत्रापि"

विशिष्टः स्वपक्षः ।

"........प्रवृद्धान् स्वाश्रये स्थितान् ।
स्वाश्रयेषु प्रदुष्टानां स्थितैव ह्याशुकारिता ॥
विज्ञाय कर्मभिः स्वैः स्वैर्दोषोद्रेकं यथायथम्[3] ।
भेषजं योजयेत्तत्तत् तन्त्रीकुर्यान्न तु क्रमम् ॥"
(अ. सं. सू. २१)

इति पूर्वपक्षः ॥ २० ॥

विधानम् (२१) ।

**अनन्वितानामर्थानां विधानं संविधानकृत् ॥ २१ ॥**

यथा —

"कफः पित्तं मला खेषु प्रस्वेदो नखरोम च ।
स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः ॥"
(अ. हृ. शा. ३. ६३)

---

१. 'विशश्च सरणं' इति मुद्रितसंग्रहे । २. 'येप्व', 'यस्त्व' इति पाठान्तरौ । ३. 'बलम्' इति मुद्रितसंग्रहे ।

इत्योजसो मलत्वमुक्तम् । अन्यत्र तु अत्यन्तशुद्धतया चास्य मलासम्भव इति चोक्तम् । तत् कथमिति चेद् । ब्रूमः । धातूनां क्रमप्राप्तिः युगपत्प्राप्तिश्चेति वहनद्वैविध्यमस्त्येव । उक्तं च —

"तत्राहाररसो हि व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात् पच्यमानः स्वात्मकाल[1]प्रच्युतिसम[2]कालमेव प्राप्तरक्तादिधातुसंज्ञः कालवदस्खलितबलप्रमाणो देहमूर्ज[3]यन् धातुन् धातुमलांश्च पुष्णाति" (अ. सं. शा. ६) ॥

"अथान्नकिट्टमच्छं मूत्रम् । घनं शकृत् । रसस्य सारो रक्तम् । मलः कफो लसीका च । रक्तस्य सारो मांसं कण्डराः सिराश्च । मलः पित्तम् । मांसस्य सारो मेदस्त्वचो वसा च । किट्टं कर्णनासाक्षिरोमकूपप्रजननमलाः । शुक्रस्य सारमोजः । अत्यन्तशुद्धतया चास्य मलासम्भवः । अत एवान्येऽपि अस्य नेच्छन्ति पाकम् ।" (अ. सं. शा. ६) उक्तं च तैः —

"कफः पित्तं मलाः खेषु प्रस्वेदो नखरोम च ।
नेत्रविट्त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥"
(अ. सं. शा. ३)

इत्यत्रौजसो न मलत्वं शुक्रधात्वग्निस्तु परं दाह्याभावात् तत्रैव तिष्ठति ।

---

१. 'स्वात्मभाव' इति, २. 'समनन्तरमेव' इति, ३. 'मूर्जयित्वा' इति च पाठभेदः ।

"पारम्पर्येण दावाग्नेस्तत्तत्प्राप्येन्धनं शिखा ।
वृद्धिक्षयौ यथा याति तद्वद् धातुपरम्परा ॥"
(अ. सं. सू. १९)

इति वचनात् । "अन्ये पुनर्वर्णयन्ति । अभ्यवहृतमात्रस्याहारस्य कण्ठनाडीप्रलुठितस्य महानिम्नमवतीर्णस्य (यो) य एवांशः कायाग्निनावलीढः पाकमुपनीयते तस्य तस्यैव प्रसादाख्यो रसलेशोऽभिनिवृत्तिसमनन्तरमेव समं समस्तधातुषु संवृतासंवृतस्रोतस्सु परिस्रुतो विवृतमुखे(ष्वा)सन्नेषु च भूयान् प्रथमतरं चान्वेति पर्यायेणेतरेष्विति । एवमन्नरस एव साक्षात् सर्वधातून् केनचिदेव कालभेदेन पुष्णाति । न पुनर्धातवो धात्वन्तरतां स्वरूपोपमर्देन" (अ. सं. शा. ६) इति ॥

अत्र अन्नरसस्य शुक्रधात्वग्निसमये रसात्मकमोजो भवति।

"दशमूलसिराहृत्स्थास्ताः सर्वाः सर्वतो वपुः ।
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ॥"
(अ. हृ. शा. ३. १८)

इति वचनात् तदोजसः शुक्रमलत्वमुच्यते । अन्यच्च —

"रसाद् रक्तं ततो मांसं मांसान्मेदोऽस्थि मेदसः ।
अस्थ्नो मज्जा ततः शुक्रं शुक्राद् गर्भः प्रजायते ॥"
(अ. हृ. शा. ३. ६२)

इति न्यायेन गर्भाशयपतितस्य निर्मलस्याप्यार्तवेनैकलोळीभूतस्य पित्तपक्वाशयान्तरे ऊष्मणा पच्यमानस्य शुक्रस्य सारो गर्भः । तत्सहकारिणः पुनरोजसो मलत्वमुच्यते । उक्तं च

"यत्सारमादौ गर्भस्य यच्च गर्भरसा(दि ? द्र)सः ।
संवर्तमानं हृदयं समाविशति यत् पुरा ॥
यच्च[1] गर्भरसः स्नेहः प्राणो यत्र प्रतिष्ठितः ।
यस्यानाशान्न नाशोऽस्ति प्रीणिता येन देहिनः ॥
हृदयस्थमपि व्यापि तत्परं जीवितास्पदम् ।
मृदु सोमात्मकं शुद्धं रक्तमीषत्सपीतकम् ॥
यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति ।
निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः ॥"

इत्यादि ।

"ओजस्तेजस्तु धातूनां शुक्रान्तानां परं स्मृतम् ।" इति धातुवहनक्रमजातस्य शुक्रस्य मलत्वमङ्गीकुर्वन्ति । तस्मात् पक्षद्वयमप्याचार्यमतमेव । अपरे पुनर्वर्णयन्ति—'द्विविधा वातादयः प्राकृता वैकृताश्च । तत्र प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरैकजन्मानः । ते शरीरधारणाद् धातुसंज्ञाः दोषाख्यानां वैकृतानां बीजभूताः मुमूर्षोः स्वरूपाच्चलन्ति ।" (अ. सं. शा. ८) ॥

"वैकृतास्तु गर्भादभिनिस्सृतस्याहाररसस्यमलाः संभवन्ति । प्राकृतेष्ववरोहन्ति । तद्वदोजोऽपि परं हृदयस्थमष्टबिन्दुप्रमाणमाधारः प्रासृतिकस्य रसात्मकस्यौजसः क्षयवृद्धिभाज ।" (अ. सं. शा. ८) इति तद्वदिति प्राकृतवत् । इति विधानम् ॥ २१ ॥

---

१. 'यच्छरीररसः' इति मुद्रितसंग्रहे ।

अनुमतम् (२२) ।

अपास्यानुमतं पक्षानात्मपक्षव्यवस्थितिः ॥ २२ ॥

यथा —

"यथा रसाञ्जगुः पाकान् षट् केचित् तदसांप्रतम् ।
यत्स्वादुर्व्रीहिरम्लत्वं नचाम्लमपि डाडिमम् ॥
याति तैलं च कटुतां कटुकापि न पिप्पली ।
यथा रसत्वे पाकानां न स्यादेवं विपर्ययः ॥"

(अ. सं. सू. १७)

इत्यादिना परपक्षमपास्य प्रायः स्वादुः स्वादुलवणयोरम्लोऽम्लस्य कटुरितरेषामिति प्रायःशब्देन क्वचित् क्वचिद् व्यभिचारं दर्शयन्नात्मपक्षं स्थापितवानाचार्यः । रसान्तरं विपाक इति कल्पते स्वाद्वम्लकटुकानां रसान्तरत्वं तु मधुराम्लकटुकस्कन्धद्रव्यरसभेदाद् युज्यत एव । तस्माद् रसैः स्वाद्यादिभिरसौ तुल्यफल इति । 'फले वातादिशमनकोपनाख्ये तुल्य' इति वचनाद् रसान्तरत्वमूरीकृतम् । तर्हि रसविपाककार्ययोर्न भेद इति चेत् । नैवम् । रसकार्याद् विपाककार्यं बलीयः । उक्तं च —

"रसं विपाकस्तौ वीर्यं प्रभावस्तान्व्यपोहति ।
बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥"

(अ. सं. सू. १७)

इतीदृशा स्वभावशक्तिः । अन्यच्च पराशरः पठति —

"पाकास्त्रयो रसानामम्लोऽम्लं पच्यते कटुः कटुकम् ।
चात्वारोऽन्ये मधुरं सङ्कीर्णरसास्तु सङ्कीर्णम् ॥

कटुतिक्तकषायाणां कटुको येषां विपाक इ(ति) पक्षः।
तेषां पित्तविघाते तिक्तकषायौ कथं भवतः॥"

इति। "तत्र यन्मधुरं रसविपाकयोः शीतवीर्यं च द्रव्यं यच्चाम्लं तयोरुष्णवीर्यं च। यद्वा कटुकं तेषां यथास्वं रसेभ्यः प्रायो गुणान् दोषकोपशमनत्वं च विद्यात्। तद् यथा—क्षीरमदिरामरिचादीनाम् रसादिसङ्करेण त्वन्यथात्वम्। यथा मधु मधुरं, श्लेष्माणं शमयति कटुविपाकतया। सकषायत्वाद् रौक्ष्याच्च वातं जनयति शीतवीर्यत्वाच्च। अम्लं काञ्चिकं कफं जयति रूक्षोष्णत्वात्। कपित्थं तु रौक्ष्याद्, आमलकं पित्तं शीतवीर्यत्वात् स्वादुपाकतया च। कफं रौक्ष्याल्लाघवाच्च। शैत्यरौक्ष्यलाघवैस्तु न वातं जयति। लवणं सैन्धवं स्वादुपाकतया पित्तं जयति। लाघवात् कफम्। कटुका शुण्ठी स्नेहौष्ण्यस्वादुपाकैर्वातं क्षपयति पिप्पली च। तिक्तानि व्याघ्रीविशल्याकर्णगुरूण्युष्णवीर्यत्वात् पित्तं जनयन्ति। कषायतिक्तं महत् पञ्चमूलं वातं जयति न पित्तमुष्णवीर्यत्वात्। कषायश्च कुलत्थोऽम्लपाकतया चेति। एतन्निदर्शनमात्रमुक्तम्" (अ. सं. सू. १७)। तेन

"किञ्चिद्रसेन कुरुते कर्म वीर्येण चापरम्।
द्रव्यं गुणेन पाकेन प्रभावेनैव किञ्चन॥"

(अ. सं. सू. १७)

इत्यनुमतम्॥ २२॥

व्याख्यानम् (२३)।

व्याख्यानमात्मनोक्तानामात्मनैवार्थभाषणम्॥२३॥

यथा— "पित्तविकाराः पुनरोषः प्लोषो दवो दवथुः" (अ. सं. सू. २०) इत्यादीनामाशुकारितया चिकित्साकारि। तेषां स्वरूपं व्याख्यातवानाचार्यः। तत्र सर्वाङ्गीणस्तीव्रः सन्तापो दाहः। स्वेदारतिमानोषः। प्रादेशिकः स्वेदरहितोऽग्न्यर्चिषेव दाहः प्लोषः। मुखोष्ठतालु(पाद)दाहो दवः। चक्षुरादीन्द्रियेषु दाहो दवथुः। "पाणिपादांस(देशे ? मूलेषु) त्रिविधः सन्तापो विदाहः" (अ. सं. सू. २०) इत्यादि। इति व्याख्यानम्॥ २३॥

संशयः (२४)।

**निर्धारितानामर्थानामव्यवस्था तु संशयः॥ २४॥**

यथा—

"साध्ययोरपि संयोगो बलिनोर्यात्यसाध्यताम्।
विद्यादसाध्यमेवातः साध्यासाध्यसमागमम्॥
नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्।
पादापचाराद् दैवाच्च यान्त्यवस्थान्तरं गदाः॥"

(अ. सं. सू. ३)

चशब्दोऽत्र विकल्पे।

"समुच्चयान्वाचययोस्तुल्ययोगे च कारणे।
इतरेतरयोगेऽपि च यद्यर्थविकल्पयोः॥"

इति संशयः॥ २४॥

अतीतापेक्षा (२५)।

**भवेदतीतापेक्षा सा भूयोऽप्युक्तव्यपेक्षिता॥ २५॥**

यथा—'समः समाने स्थानस्थ' (अ. सं. शा. ६)

इत्यादे'स्तैर्भवेद् विषम' (अ. सं. सू. १) इत्यादिग्रन्थार्थमपेक्ष्य "समाने स्थानस्थ" इति वाक्येन समैर्दोषैः समाग्निः । "विमार्गग" इति वाक्येन वातोत्कर्षेण विषमोऽग्निः । पित्तोत्कर्षेण तीक्ष्णोऽग्निः । कफपीडिते मन्दाग्निर्भवेत् । इति हि तात्पर्यम् । अन्यथा व्यवहारव्याहतिरेव । एवमत्र समानानिलप्राधान्यस्य को हेतुरिति चेत्—

"सिराविभागे ये चोक्ता विषमाद्यास्त्रयोऽग्नयः ।"
(अ. सं. नि. ८)

इत्यादिवचनादग्निः परं रक्षितव्यः । तस्य च 'समानोऽग्निसमीपस्थ' (अ. हृ. सू. १२. ८) इति वचनात् समानस्य प्राधान्यं कलितवानाचार्यः । अग्नीनां लक्षणम्—

"यः पचेत् सम्यगेवान्नं भुक्तं सम्यक्समस्त्वसौ ।
विषमो सम्यगप्याशु सम्यक् चापि चिरात्पचेत् ॥
तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ।
मन्दस्तु सम्यगप्यन्नमुपयुक्तं चिरात् पचेत् ॥
कृत्वास्यशोषाटोपान्त्रकूजनाध्मानगौरवम् ।"
(अ. हृ. शा. ३. ७४)

इत्यतीतापेक्षा ॥ २५ ॥

अनागतापेक्षा (२६) ।

भवेदनागतापेक्षा भावितार्थप्रदर्शनम् ॥ २६ ॥

यथा—'मूत्रजेषु तु पाने च' (अ. सं. सू. ५) इत्यादिग्रन्थस्य मूत्रनिरोधजेषु व्याधिषु पाने प्राग्भक्तं भक्तात् पूर्वं यामद्वयजरणलक्षणया मात्रया घृतं शस्यते । एतन्मात्राद्वयम् ।

अनागतमवाक्पीडनादवपीडकं नाम । स तीक्ष्णाग्निश्चेत् तदुचिता कापि मात्रा कल्प्या । वातहरत्वेऽप्यल्पसूत्रत्वात् तैलं न शस्तम् । इत्यनागतापेक्षा ॥ २६ ॥

स्वसंज्ञा (२७) ।

**स्वसंज्ञा सा तु या संज्ञा स्वतन्त्रेष्वेव दृश्यते ॥ २७ ॥**

यथा — 'शाखारक्तादयस्त्वक् च' (अ. हृ. सू. १२. ४४) इति संज्ञिता । यद्येवं 'स्नेहक्लिन्नाः कोष्ठगा' (अ. हृ. सू. १७. २९) इत्यादिग्रन्थे शाखाः किं व्यपदेशाः तत्र शाखाः पाणिपादाः । सिराविभागे तु '* तत्रैकैकत्र शाखायां शतम्' (अ. सं. सू. ६) इत्युक्तत्वात् । इति स्वसंज्ञा ॥ २७ ॥

ऊह्यम् (२८) ।

**ऊह्यमुक्तानुसारेण विशिष्टार्थविवेकिता ॥ २८ ॥**

यथा—'अकाले बहु वाल्पं वा भुक्तम्' (अ. हृ. सू. ८. ३४) इत्यादौ अकाल इत्यतीतोऽप्राप्तः कालश्च । बह्विति यथोक्तमितेरधिकता । अल्पमिति तदल्पता । तेन अतीतकाले बहुभुक्तं वा अप्राप्तकाले बहु वाल्पं वा कु(?)भुक्तं विषमाशनं विद्यात् । अतीते तु—

"तत्र योज्यं लघुस्निग्धमुष्णमल्पं च भोजनम् ।"
(अ. हृ. सू. ४. १२)

इति क्षुन्निग्रहस्य चिकित्सितत्वेनोक्तत्वात् अल्पस्य न विषमाशनत्वम् । 'अतिमात्रं पुनः सर्वानाशु' (अ. हृ. सू. ८. ४) इत्यस्य उदरपूर्तिरितिसौहित्यं चोक्तम् । मात्रालक्षणं तु पिण्डपरिमाणतस्तु 'अन्नेन कुक्षेर्द्वावंशौ' (अ. हृ. सू. ८. ४६) इत्यादि । प्रतिद्रव्यापेक्षया "गुरूणामर्धसौहित्य"मित्यादि ।

* 'तासामेकैकस्मिन् सक्थ्नि शतम्' इति मुद्रितसंग्रहे दृश्यते ।

"अकाले बहि" त्यादि कालापेक्षा । मात्रास्वरूपं तु "कुक्षेर-प्रतिपीडनमाहारेण हृदयस्यासंरोधः। पार्श्वयोरविपाटनमनति-गौरवमुदरस्य । प्रीणनमिन्द्रियाणाम् । क्षुत्पिपासोपरतिस्थाना-सनशयनगमनोच्छ्वासप्रश्वासहास्यसंकथासु सुखानुवृत्तिः । सायं प्रातश्च सुखेन परिणमनम् । बलवर्णोपचयकरत्वं च" (अ. सं. सू. ११) इत्याचार्येणैव दर्शितम् । इत्यस्य नाधिकत्वं बहु । अत्यधिकमतिमात्रमित्यर्थः । अन्ये व्याख्याकाराः अकाले भुक्तं बहु वाल्पं वा भुक्तं विषमाशनं विद्यादिति वर्णयन्ति ।

"हीनातिमात्रमशनं मलन्निचयकोपनम् ।"

इत्युक्तत्वात् । इत्यूह्यम् ॥ २८ ॥

समुच्चयः (२९) ।

**समुच्चयस्तु योग्यत्वमुक्तानां तु प्रदर्शयेत् ॥ २९ ॥**

यथा —'पेयां विलेपीम्' (अ. हृ. सू. १८. २९) इत्यादौ यूषरसयोस्तु सान्नत्वं च शब्दाद् योग्यतया समुच्चीयते। अत्र प्रधानशुद्धस्य तृतीयदिनात् परं यूषरसाभ्यां त्रिदिनमपोह्य सप्तमेऽह्नि प्रकृतिभोजनमित्यर्थः । एवमन्ययोरपि वेद्यम् । "अकृतं कृतमि"ति यूषरसयोः प्रत्येकमिति केषाञ्चिन्मतम् । इति समुच्चयः ॥ २९ ॥

निदर्शनम् (३०) ।

**निदर्शनं त्वसम्भाव्योऽर्थो येन समर्थ्यते ॥ ३० ॥**

यथा — "शुक्रार्तवगर्भाशयकालेषु मातुश्चाहारवि-हारैरेकोऽनेको वा दोषो भवत्याधिक्येन । तेनामरणाद् विष-वल्यामिवोत्पद्यमानस्य क्रिमेर्विषेण सविषक्रिमेरिव वृश्चिकादे-राशीविषस्येव वा स्वविषेण प्रकृतिर्जायते" (अ. सं. शा. ८)

इत्यत्र दृष्टान्तत्रयं किं प्रयोजनमिति चेत् । उच्यते —

"अल्पमध्यातिमात्रत्वाद् दोषाणां च विषस्य च ।
भवेत् प्रकृतिरित्युक्तं दृष्टान्तत्रितयं क्रमात् ॥"

अत्र प्रकृत्युत्पादनं प्रत्येवमुक्तं प्रकृतिविघाते तु रिष्टप्रकरणे —

"पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ।"
(अ. हृ. शा. ५. १)

इत्यत्र दृष्टान्तत्रयेण —

"चिरात् सद्योऽल्पकालेन सूचयन्त्यायुषः क्षयम् ।
रिष्टानीति हि निर्दिष्टं रिष्टाभासो न चेत्तदा ॥"

"प्रकृतिर्नाम शरीरस्वरूपं सा च जन्ममरणान्तरालवर्तिनी स्वकारणोद्रेकजनिता निर्विकारा कापि दोषस्थितिः" । इति निदर्शनम् ॥ ३० ॥

निर्वचनम् (३१) ।

**तत् स्यान्निर्वचनं येन वाक्यस्यार्थः प्रदर्श्यते ॥ ३१ ॥**

यथा — शरीरारोहणादचिन्त्यप्रभावतयास्मिन्नूहासम्भवाच्च निरूह इत्यादि । अनेन वस्तीनां प्रमादत्वं सूचितमेव । यथा —

"यत्तत्रौषधवीर्यं तु तद्व्यानेन वायुना ।
पर्याप्तमचिरादेव समानः प्रतिपद्यते ॥
समानादुत्तरश्चैवं व्यानाद्याः पवनाः क्रमात् ।
ते तृप्ताः प्रकृतिं याताः शरीरानुग्रहे स्थिताः ॥
प्रशाम्य पित्तश्लेष्माणौ यथास्थानं निवेश्य च ।
सन्तर्पयन्ति परितः स्वान् स्वान् भूतगुणांस्तनौ ॥

व्यानस्तिर्यगपानोऽधः प्राणश्चोर्ध्वं प्रकर्षति ।
यथास्वमेव नाडीभिर्हारिणीभिरिवोदकम् ॥

एवं वातः सिराभिश्च वपुर्वस्तिः सुयोजितः ।
व्याप्नुवन् प्रसभं हन्ति सुकृच्छ्रानपि यक्ष्मणः ॥"

इत्यारोहणक्रमः । अन्नमनुवसन्नपि न दुष्यतीत्यनुवासनम् । अपिशब्दादच्छस्नेहस्य सान्नत्वे दोषः सम्भवति । तस्मान्निरन्न एवाच्छः । तथाहि—

"सम्यग्घीनातियोगाश्च तस्य स्युः स्नेहपीतवत् ।"
(अ. हृ. सू. १९. ५३)

इत्युक्तत्वात् स्नेहपानसमानत्वमनुवासनस्य । त्र्यहमच्छमनुवासरं दीयत इति पानयोर्विशेषः । इति निर्वचनम् ॥ ३१ ॥

नियोगः (३२) ।

**नियोगोऽतद्विधानां तु तद्विधत्वनियोजना ॥ ३२ ॥**

यथा—क्षीरगुणकथने "स्निग्धं गुरुशीतल"मिति गुर्वादिपठिता गुणाः । स्वादुपाकादीनां तु साहचर्योपचाराद् गुणत्वमङ्गीकृतम् । आचार्येणापि 'गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रय' (अ. हृ. सू. ९. ४) इत्यादिना रसस्य गुणत्वं व्यपदिष्टम् । व्यपदिष्टं न तत्वतः । निर्गुणा गुणा इति न्यायात् ।

"इन्द्रियार्था व्यवायी च विकाषी चापरे गुणाः ।"
(अ. सं. सू. १)

इति रसस्य गुणत्वमुपचरितं तेनाहाररसपरिणामस्य विपाक-

स्यापि गुणत्वमुक्तं किं पुनर्गुणोत्कर्षस्य वीर्यस्य इति पूर्वाचार्यस्य नियोगः। अन्यच्च

"बृंहणं लङ्घनञ्चैव शमनं शोधनं तथा ।
स्तम्भनं स्वेदनं चापि क्लेदनं शोषणं पुनः ॥
रोपणं लेखनं चैव प्रसादनविलोलने ।
श्लथनं द्रढनं चापि धारणव्यापनं पुनः ॥
विवृतिः संवृतिश्चैव तथा क्षालनलेपने ।
एतानि सौम्याप्याग्नेयवायव्यान्यपि विंशतिः ॥
अन्यानि चैवंरूपाणि गुर्वादिगुणशक्तयः ।"

अतो दोषकोपशमनत्वमपि गुणकार्यमेव। गुणो नाम द्रव्यस्य कापि वैशिष्टिः। आचार्येण तु 'प्रत्येकं तच्चतुर्गुणम्' (अ.सं.सू. २) इति भिषगादिवैशिष्टिर्दर्शिता। गुरुमन्देत्यादौ अष्टविधं वीर्यं च। गुर्वादिसूचनार्थं हि तत्तत्पदच्छेदकल्पना कृता। इति नियोगः ॥ ३२ ॥

विकल्पनम् (३३)।

विकल्पनमनिर्धार्यमर्थं प्रति विवेचनम् ॥ ३३ ॥

यथा —

"बृंहणं लङ्घनं नालमतिमेदोऽग्निवातजित् ।"

(अ. हृ. सू. १४. ३२)

इति स्थूलस्य दुश्चिकित्स्यत्वमुक्तम्। कथमिति चेत् —

"स्रोतःसु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः ।
चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ भवतोऽधिकम् ॥
स्थूलं, कोटरवद्वृक्षौ दहतोऽग्न्यनिलौ च तौ ।"

(अ. सं. सू. २४)

इत्युक्तत्वाद् । मेदोहराण्यग्न्यनिलकराणि । मेदस्कराण्यग्न्यनिलहराणि । ततो विरुद्धोपक्रमत्वात् । नहि । 'नहि स्थूलस्य भेषजम्' (अ. सं. सू. २४) इति भेषजासिद्धिरुक्ता । 'विळङ्गं नागरम्' (अ. सं. सू. २४) इत्याद्यपार्थमेव स्यात् । इति विकल्पनम् ॥ ३३ ॥

प्रत्युत्सारः (३४)।

**प्रत्युत्सारः पदाद्यन्त्यमध्यलोपो यथायथम् ॥ ३४ ॥**

यथा — "वेगान्न धारये"दित्यादौ अधःशब्द आदिपदलोपः। अनन्तरमेवा"धोवातस्ये"त्युक्तत्वात्। "द्रवद्रव्यविज्ञानीय"मित्यत्र स्वरूपशब्दो मध्यपदलोपः। परत्रा"न्नस्वरूपविज्ञानीय"मित्युक्तत्वाद्। "दिनचर्या"मित्यत्र दिनेषु पुरुषस्य चर्या न त्वध्यायस्य। तेन चर्याविज्ञानीयमिति वक्तव्ये विज्ञानीयशब्दोऽन्ते लुप्तः। अन्यत्र विज्ञानीयशब्दप्रयोगात्। एव"मृतुचर्या"दयः। 'अन्नं कालेऽभ्यवहृतम्' (अ. हृ. शा. ३. ५५) इत्यत्र आदिमध्यान्तशब्दा लुप्ताः। इति प्रत्युत्सारः॥ ३४॥

उद्धारः (३५)।

**उद्धारः प्रथमं प्रोक्तमर्थमुद्धृत्य योजना ॥ ३५ ॥**

यथा — 'निद्रायत्तं सुखं दुःखम्' (अ. सं. सू. ९) इत्यादिना प्रोक्तमर्थ"मकालेऽतिप्रसङ्गाच्चे"त्यादिना "सुखायुषी" प्रत्याहृत्य कथितम्। अतिप्रसङ्गादिति न कालपरः निद्राधिक्यपर एव। अन्यथा अकालप्रसङ्गः स्यात् निद्रायाः। "अकाल" इति मिथ्यायोगः। "अतिप्रसङ्गादि"ति अतियोगः।

"नचे"ति हीनयोगः । एवं त्रिविधा निद्रा "सुखायुषी पराकुर्यात्" अपरा सम्यङ्निषेविता निद्रा दुःखमरणे प्रत्याहृत्य पराकुर्यादिति चशब्दादागता । निद्रा नाम तामसी कापि वृत्तिः ।

"लोकादिसर्गप्रभवा तमोमूला तमोमयी ।
बाहुल्यात् तमसो रात्रौ निद्रा प्रायेण जायते ॥"
(अ. सं. सू. ९)

इति वचतात् ।

"अपच्यमानो बाहुल्यात् स्रोतांस्यावृणुते कफः ।
ततः स्रोतःसु रुद्धेषु जायते गात्रगौरवम् ॥
गुरुगात्रस्य चालस्यमालस्यादतिनिद्रता ।"
(अ. सं. सू. ९)

इति निद्राधिक्यम् ।

"श्लेष्मावृतेषु स्रोतःसु क्रमादुपरतेषु च ।
इन्द्रियेषु स्वकर्मभ्यो निद्रा विशति देहिनम् ॥"
(अ. सं. सू. ९)

इति तदावेशविवशस्य शयनं स्वप्नः ।

"सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा ।
विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति ॥"
(अ. सं. सू. ९)

स्वप्नसमये दर्शनविशेषः अस्तु नाम किन्तु 'निद्रानाशादङ्ग-

१. 'श्रमाद्' इति पाठभेदः.

मर्द' (अ. सं. सू. ९) इत्यादिश्च 'निद्राया मोहमूर्ध्वक्षि' (अ. सं. सू. ५) इत्यादिश्च पुनरुक्त इव । नैवम् । अतिभाष्यादिना निद्रानाशादङ्गमर्दादयः । निद्राया वेगधारणान्मोहादयः ।

"दिवा स्वप्नप्रसङ्गे तु मुहूर्तं स्वपनं मतम् ।
ततोऽधिकं यदि भवेत् कोपाय कफपित्तयोः ॥
अकालशयनान्मोहज्वरस्तैमित्यपीनसाः ।
शिरोरुक्*कासहृल्लासस्रोतोरोधाग्निमन्दताः ॥
तत्रोपवासवमनस्वेदनावनमौषधम् ।
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥
नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः ।
एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात् ॥
निद्रानाशादङ्ग†शिरोगौरवालस्यजृम्भिकाः ।
जाड्यं ग्लानिभ्रमापक्तितन्द्रा रोगाश्च वातजाः ॥
यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ।"
(अ. हृ. सू. ७. ६०–६४)

इत्यनेन हीनमिथ्यातियोगानिद्राणां रोगांश्चिकित्सां चोक्तवान् ।

"कालस्वभावाऽऽमयचित्तदेह-
स्वेदैः कफागन्तुतमोभवा च ।
निद्रा बिभर्ति प्रथमा शरीरं
‡पाप्मान्तगा व्याधिनिमित्तमन्या ॥"
(अ. सं. सू. ९)

इति विशेषविभागश्च प्रोक्तः । इत्युद्धारः ॥ ३५ ॥

* 'शोफ' इति, † 'मर्दशिरोगौरवजृम्भिकाः' इति, ‡ 'पापात्मिका' इति च पाठभेदः.

सम्भवः (३६) ।

**सम्भवो भावयेद् युक्त्या तन्त्रार्थमनुरूपया ॥ ३६ ॥**

यथा—"नित्यं हिताहारविहारे"त्यादिना निजरोगानुत्पत्तिरुक्ता । "अर्थेष्वलभ्येष्वि"त्यादिनागन्तुरोगानुत्पत्तिः । "कालोऽनुकूल" इत्यादिना कर्मरोगानुत्पत्तिः । इति बोद्धव्यम् । 'यथा तावत् तेऽर्थप्रत्यायनपरा' (अ. सं. सू. १) इत्यादिना महर्षीणां वचनानादरत्वमुद्घोषितवता लाघविकेनाचार्येण श्रीवाहटेन पद्यत्रयमिदं न प्रसज्येत । इति सम्भवः ॥ ३६ ॥

इत्यधिकरणादिसम्भवान्तं षट्त्रिंशत्संङ्ख्यास्तन्त्रयुक्तयः । एता एवमेवं तत्र तत्र तन्त्रप्रदेशे सर्वत्र सावधानेनोपयोज्याः ॥

इति वैद्यनाथापरनामधेयेन नीलमेघभिषजा
विरचितस्तन्त्रयुक्तिविचारः समाप्तः ॥

---

शुभं भूयात् ।